स्सर्वसिद्धत्वात्, तत्र सत्त्वस्य कालसम्बन्धित्वरूपत्वात् । न च—तादृशप्रत्यक्षे सत्ताजातिरेव विषय इति—वाच्यम्; सामान्यं सदित्यादिप्रत्यक्षानुपपत्तेः । न च—तादृशप्रतीतौ सामानाधिकरण्यसम्बन्धेन सत्ताया भानमति—वाच्यम्; घटस्सन्, सामान्यं सदिति—प्रतीत्योरविलक्षणाकारतया क्वचित्समवायेन सत्ताया विषयत्वं; क्वचित्सामानाधिकरण्येन तस्या विषयत्वमिति कल्पनाया अनुपपन्नत्वात् । कालसम्बन्धस्यैव सत्त्वरूपत्वे चोभयत्रैकाकारतानिर्वाहः ॥ **मीमांसकैस्तु** कालस्य सर्वज्ञानविषत्वमुक्तम्—

"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते ॥"—इति॥ तत्र प्रत्यक्षं स्वाधिकरणक्षणावच्छिन्नमेव स्वविषयमवगाहत इत्युत्सर्गः । अत एव धारावाहिज्ञानस्थले तत्तत्क्षणविशिष्टघटादेर्भानात् द्वितीयादिज्ञानानामप्यज्ञातज्ञापकत्वात्प्रामाण्यमिति मीमांसकाः ॥

परत्वापरत्वे च बहुकालसंयुक्तत्वाल्पकाल संयुक्तत्वरूपे, न तु गुणान्तरमिति वक्ष्यते ॥

दिग्द्रव्यं तु नातिरिक्तं, तत्तन्मूर्तात्मकोपाध्यवच्छिन्नाकाशादिभिस्तत्तन्मूर्तैरेव वा प्राच्यादिव्यवहारनिर्वाहात् । चैत्रादिनिष्ठोदयगिरिसंयुक्तसंयोगापेक्षया अल्पतरोदयगिरिसंयुक्तसंयोगवन्मूर्तं चैत्रस्य प्राची, चैत्रनिष्ठोदयगिरिसंयुक्तसंयोगापेक्षया अधिकतरोदयगिरिसंयुक्तसंयोगवन्मूर्तं चैत्रस्य प्रतीची ; एवं सुमेरुसंयुक्तसंयोगाल्पत्वभूयस्त्वाभ्यामुदीचीत्वदक्षिणात्वे बोध्ये न च—'पद्भ्यां भूमिर्दिशश्श्रोत्रात्' इति दिशः पृथक्सृष्टेः, 'दिशःश्रोत्रम्' इति पृथग्लयस्य च श्रुतिसिद्धत्वादाकाशाद्यतिरिक्तं कार्यभूतं दिग्द्रव्यमभ्युपगन्तव्यमिति—वाच्यम् ; तथा